पञ्चीकरणं

ॐ

श्रीमच्छंकराचार्यविरचितम् पञ्चीकरणम्

ॐ पञ्चीकृतंपञ्चमहाभूतानि तत्कार्यं
च सर्वं विराडित्युच्यते ।
एतत्स्थुलशरिरमात्मनः ।
ईन्द्रियैरर्थोपलब्धिर्जागरितम् ।
तदुभयाभिमान्यात्मा विश्वः ।
एतत् त्रयमकारः ॥ १॥

अपञ्चीकृतपञ्चमहाभूतानि पञ्चतन्मात्रणि
तत्कार्यं च पञ्च प्राणाः दशेन्द्रियाणि
मनोबुद्धिश्चेति सप्तदशकं लिंजम् भौतिकं
हिरण्यगर्भ इत्युच्यते ।
एतत्सूक्ष्मशरिरमात्मनः ॥ २॥

करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः
सविषयः स्वप्न इत्युच्यते ।
यदुभयाभिमान्यात्मा तैजसः ।
एतत् त्रयमुकारः ॥ ३॥

शरीरद्वयकारणमात्माज्ञानं
साभासमव्याकृतमित्युच्यते ।
एतत् कारणशरीरमात्मनः ।
तच्च न सन्नासन्नापि सदसन्न भिन्नं नाभिन्नं
नापि भिन्नाभिन्नं कुतश्चित्
न निरवयवं न सावयवं
नोभयं किंतु
केवलब्रह्मात्मैकत्वज्ञानापनोद्यम् ॥ ४॥

सर्वप्रकारज्ञानोपसंहारे बुद्धेः
कारणात्मनाऽवस्थानं सुषुप्तिः ।
तदुभयामिमान्यात्मा प्राज्ञः ।
एतत् त्रयम् मकारः ॥ ५॥

अकार उकारे उकारो मकारे मकार ओंकारे
ओंकारोऽहम्येव ।

अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः
नाज्ञानं नापि तत्कार्यं किंतु
नित्यशुद्धबुद्धमुक्तसत्यस्भावं
परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मै
वाहमस्मीत्यभेदेनावस्थानं समाधिः ॥ ६॥

तत्त्वमसि ब्रह्महमस्मि प्रज्ञानमानन्दं ब्रह्म
अयमात्मा ब्रह्म इत्यादिश्रुतिभ्यः ॥ ७॥

इति पञ्चीकरणं भवति ॥

इति श्रीशङ्कराचार्यविरचितं पञ्चीकरणम् ॥

पञ्चीकरणवार्त्तिकम्
श्रीसुरेश्वराचार्यकृत

ओंकारः सर्ववेदानां सारस्तत्त्वप्रकाशकः ।
तेन चित्तसमाधानं मुमुक्षूणां प्रकाश्यते ॥ १॥

आसीदेकं परं ब्रह्म नित्यमुक्तमवीक्रियम् ।
तत्स्वमायासमावेशाद् बीजमव्याकृतात्मकम् ॥ २॥

तस्मादाकाशमुत्पन्नं शब्दतन्मात्ररूपकम् ।
स्पर्शात्मकस्ततो वायुस्तेजोरूपात्मकं ततः ॥ ३॥

आपो रसात्मिकास्तस्मात्ताभ्यो गन्धात्मिका महि ।
शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरूत् ॥ ४॥

शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते ।
शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः ॥ ५॥

शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ।
तेभ्यः समभवत्सूत्रं भूतं सर्वात्मकं महत् ॥ ६॥

ततः स्थूलानि भूतानि पञ्च तेभ्यो विराडभूत् ।
पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः ॥ ७॥

पृथिव्यादीनि भूतानि प्रत्येकं विभजेद् द्विधा ।
एकैकं भागमादाय चतुर्धा विभजेत्पुनः ॥ ८॥

एकैकं भागमेकस्मिन् भूते संवेशयेत्क्रमात् ।
ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि ॥ ९॥

वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् ।
पञ्चीकरणमेतत्स्यादित्यहुस्तत्त्ववेदिनः ॥ १०॥

पञ्चकृतानि भूतानि तत्कार्यं च विराड् भवेत् ।
स्थूलं शरीरमेतत्स्यादशरीरस्य चात्मनः ॥ ११॥

अधिदैवतमध्यात्ममधिभूतमिति त्रिधा ।
एकं ब्रह्म विभागेन भ्रमाद्भाति न तत्त्वतः ॥ १२॥

इन्द्रियैरर्थविज्ञानं देवतानुग्रहान्तिवतैः ।
शब्दादिविषयं ज्ञानं तज्जागरितमुच्यते ॥ १३॥

श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम् ॥ १४॥

त्वगध्यात्ममिति प्रोक्तं स्प्रष्टव्यं स्पर्शलक्षणम्
अधिभूतं तदित्युक्तं वायुस्तत्रधिदैवतम् ॥ १५॥

चक्षुरध्यात्ममित्युक्तं द्रष्टव्यं रूपलक्षणम् ।
अधिभूतं तदित्युक्तमादित्योऽत्राधिदैवतम् ॥ १६॥

जिह्वाऽध्यात्मं तयाऽस्वाद्यमाधिभूतं रसात्मकम् ।
वरूणो देवता तत्र जिह्वायामधिदैवतम् ॥ १७॥

घ्राणमध्यात्ममित्युक्तं घ्रातव्यं गन्धलक्षणम् ।
अधिभूतं तदित्युक्तं पृथिव्यत्राधिदैवतम् ॥ १८॥

वागध्यात्ममिति प्रोक्तं वक्त्वयं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तमग्निस्तत्राधिदैवतम् ॥ १९॥

हस्तावध्यात्ममित्युक्तमादातव्यं च यद्भवेत् ।
अधिभूतं तदित्य्युक्तमिन्द्रस्तत्राधिदैचतम् ॥ २०॥

पादावध्यात्ममित्युक्तं गन्तव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं विष्णुस्तत्राधिदैवतम् ॥ २१॥

पायुरिन्द्रियमध्यात्मं विसर्गस्तत्र यो भवेत् ।
अधिभूतं तदित्युक्तम् मृत्युस्तत्राधिदैवतम् ॥ २२॥

उपस्थेन्द्रियमध्यात्मं स्त्र्याद्यानन्दस्य कारणम्
अदिभूतं तदित्युक्तमधिदैवं प्रजापतिः ॥ २३॥

मनोऽध्यात्ममिति प्रोक्तं मन्तव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं चन्द्रस्तत्राधिदैवतम् ॥ २४॥

बुद्धिरध्यात्ममित्युक्तं बोद्धव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तमधिदैवं बृहस्पतिः ॥ २५॥

अहंकारस्तथाऽध्यात्ममहंकर्तव्यमेव च ।
अधिभूतं तदित्युक्तं रुद्रस्तत्राधिदैवतम् ॥ २६॥

चितमध्यात्ममित्युक्तं चेतव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं क्षेत्रज्ञोऽत्राधिदैवतम् ॥ २७॥

तमोऽध्यात्ममत्मिति प्रोक्तं विकारस्तत्र यो भवेत् ।
अधिभूतं तदित्युक्तमीश्वरोऽत्राधिदैवतम् ॥ २८॥

बाह्यान्तःकरणैरेवं देवतानुग्रहान्वितैः ।
स्वं स्वं च विष्यज्ञानं तज्जागरितमुच्यते ॥ २९
येयं जागरितावस्था शरीरं करणाश्रयम् ।
यस्तयोरभिमानी स्यद्विश्व इत्यभिधीयते ॥ ३०॥

विश्वं वैराजरूपेण पश्येद्भेदनिवृत्तये ।
ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ॥ ३१॥

श्रोत्रत्वङ्नयनघ्राणजिह्वा धीन्द्रियपञ्चकम् ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् ॥ ३२॥

मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥ ३३॥

अभिमानात्मकस्तद्वदहंकारः प्रकीर्तितः ।
अनुसंधानरूपम् च चित्तमित्यभिधीयते ॥ ३४॥

प्राणोऽपानस्तथा व्यान उदानारव्यस्तथैव च ।
समानश्चेति पञ्चैताः किर्तिताः प्रणवृत्तयः ॥ ३५॥

खवाव्यग्न्यम्बुक्षितयो भूतसूक्ष्माणि पञ्च च ।
अविद्याकामकर्माणि लिङ्गं पुयेष्टकं विदुः ॥ ३६॥

एतत्सूक्ष्मशरीरं स्यान्मायिकं प्रात्यगात्मनः ।
करणोपरमे जाग्रत्संकारोत्थं प्रबोधवत् ॥ ३७॥

ग्राह्यग्राहकरूपेण स्फुरणं स्वप्न उच्यते ।
अभिमानी तयोर्यस्तु तैजसः परिकीर्तितः ॥ ३८॥

हिरण्यगर्भरूपेण तैजसं चिन्तयेद् बुधः ।
चैतन्याभासखचितं शरीरद्वयकारणम् ॥ ३९॥

आत्माज्ञानं तदव्यक्तमव्याकृतमितीर्यते ।
न सन्नासन्न सदसद्भिन्नाभिन्नं न चात्मनः ॥ ४०॥

न सभागं न निर्भागं न चाप्युभयरूपकम् ।
ब्रह्मात्मैकत्वविज्ञानहेयं मिथ्यात्वकारणात् ॥ ४१॥

ज्ञानानामुपसंहारो बुद्वेः करणतास्थितिः ।
वटबीजे वटस्येव सुषुप्तिरभिधीयते ॥ ४२॥

अभिमानी तयोर्यस्तु प्राज्ञ इत्यभिधीयते ।
जगत्कारणरूपेण प्राज्ञात्मानं विचिन्तयेत् ॥ ४३॥

विश्वतैजससौषुप्त विराट् सूत्राक्षरात्मभिः ।
विभिन्नमिव संमोहादेकं तत्त्वं चिदात्मकम् ॥ ४४॥

विश्वादिकत्रयं यस्माद्वैराजादित्रयात्मकम् ।
एकत्वेनैव संपश्येदन्याभावप्रसिद्धये ॥ ४५॥

ॐकारमात्रमखिलं विश्वप्राज्ञादिलक्षणम् ।

वाच्यवाचकताभेदाद्भेदेनानुपलाब्धितः ॥ ४६॥

अकारमात्रं विश्वः स्यादुकारस्तैजसः स्मृतः ।
प्राज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु ॥ ४७॥

समाधिकालात्प्रगेवं विचिन्त्यातिप्रयत्नतः ।
स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ ४८॥

अकारं पुरूषं विश्वमुकारे प्रविलापयेत् ।
उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥ ४९॥

मकारं करणं प्राज्ञं चिदात्मनि विलापयेत् ।
चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ ५०॥

परमानन्दसंदोहवासुदेवोऽहमोमिति ।
ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत् ॥ ५१॥

चिदात्मनि विलीनं चेत्तच्चित्तं नैव चालयेत् ।
पूर्णबोधात्मनाऽसीत पूर्णाचलसमुद्रवत् ॥ ५२॥

एवं समाहितो योगी श्रद्धभक्तिसमन्वितः ।
जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ॥ ५३॥

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवेत्सदा ॥ ५४॥

यः पश्येत्सर्वगं शान्तमानन्दात्मानमद्वयम् ।
न तेन किंचिदाप्तव्यं ज्ञातव्यं वावशिष्यते ॥ ५५॥

कृतकृत्यो भवेद्विद्वाञ्जीवन्मुक्तो भवेत्सदा ।
आत्मन्येवारूढभावो जगदेतन्न वीक्षते ॥ ५६॥

कदाचिदव्यवहारे तु द्वैतं यद्यपि पश्यति ।
बोधात्मव्यतिरेकेण न पश्यति चिदन्वयात् ॥ ५७॥

किन्तु पश्यति मिथयैव दिङ् मोहेन्दुविभागवत् ।
प्रतिभासः शरीरस्य तदाऽप्रारब्धसंक्षयात् ॥ ५८॥

तस्य तावदेव चिरमित्यादि श्रुतिरब्रवीत् ।
प्रारब्धस्यानुवृत्तिस्तु मुक्तस्याभासमात्रतः ॥ ५९॥

सर्वदा मुक्त एव स्याज्ज्ञाततत्त्वः पुमानसौ ।
प्रारब्धभोगशेषस्य  संक्षये तदनन्तरम् ॥ ६०॥

अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ।
चितन्यममलं शुद्धं मनोवाचामगोचरम् ॥ ६१॥

वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ।
प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ॥ ६२॥

इदं प्रकरणं यत्नाज्ज्ञातव्यं भगवत्तमैः ।
अमानित्वादिनियमैर्गुरूभक्तिप्रसादतह् ॥ ६३॥

इमां विद्यां प्रयत्नेन योगी संध्यासु सर्वदा ।
समभ्यसेदिहामुत्रभोगानासक्तधीः सुधीः ॥ ६४॥

इति श्रीमत्सुरेश्वराचार्यविरचितं पञ्चीकरणवार्त्तिकं संपूर्णम् ॥